॥ आध्यात्मिक विचार ॥

॥ १-८-२२॥

अध्यात्मिकान् योगान् अनुतिष्ठेन्न्यायसंहितान् अनैश्चारिकान् ॥ १॥

आत्मलाभान्न परं विद्यते ॥ २॥

तत्रात्मलाभीयांश्लोकान् उदाहरिष्यामः ॥ ३॥

पूः प्राणिनः सर्व एव गुहाशयस्य ।

अहन्यमानस्य विकल्मषस्य ।

अचलं चलनिकेतं येऽनुतिष्ठन्ति ते अमृताः ॥ ४॥

श्यदिदमिदिहैदिह लोके विषयं उच्यते ।

विधूय कविरेतद् अनुतिष्ठेद् गुहाशयम् ॥ ५॥

आत्मन्नेवाहमलब्ध्वैतद् धितं सेवस्व नाहितम् ।

शथान्येषु प्रतीच्छामि साधुष्ठानमनपेक्षया ।

महान्तं तेजसः कायं सर्वत्र निहितं प्रभुम् ॥ ६॥

सर्वभूतेषु यो नित्यो विपश्चिदमृतो ध्रुवः ।

अनङ्गोऽशब्दोऽशरीरोऽस्पर्शश्च महांशुचिः ।

स सर्वं परमा काष्ठा स वैषुवतंविषुवत् स

वै वैभाजनं पुरम् ॥ ७॥

श्तं योऽनुतिष्ठेत् सर्वत्र प्राध्वं चास्य सदा आचरेत् ।

दुर्दर्शं निपुणं युक्तो यः पश्येत् स मोदेत विष्टपे ॥ ८॥

॥ १-८-२३॥

शात्मन् पश्यन् सर्वभूतानि न मुह्येच् चिन्तयन् कविः ।

आत्मानं चैव सर्वत्र यः पश्येत् स वै ब्रह्मा नाकपृष्ठे

विराजति ॥ १॥

निपुणोऽणीयान् बिसोर्णाया यः सर्वं आवृत्य तिष्ठति ।

वर्षीयांश्च पृथिव्या ध्रुवः सर्वं आरभ्य तिष्ठति ।

स इन्द्रियैर्जगतोऽस्य ज्ञानादन्योऽनन्यस्य ज्ञेयात् परमेष्ठी

विभाजः । तस्मात् कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स

नित्यः ॥ २॥

दोषाणां तु विनिर्घातो योगमूल इह जीविते ।

निर्हृत्य भूतदाहीयान् क्षेमं गच्छति पण्डितः ॥ ३॥

अथ भूतदाहीयान् दोषान् उदाहरिष्यामः ॥ ४॥

क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्यम्

अत्याशपरीवादावसूया काममन्यू अनात्म्यमयोगस्तेषां ।

योगमूलो निर्घातः ॥ ५॥

अक्रोधोऽहर्षोऽरोषोऽलोभोऽमोहोऽदम्भोऽद्रोहः

सत्यवचनमनत्याशोऽपैशुनमनसूया संविभागस्त्याग

आर्जवं मार्दवं शमो दमः सर्वभूतैरविरोधो योग आर्यम्

आनृशंसं तुष्टिरिति सर्वाश्रमाणां ।

समयपदानि तान्य् अनुतिष्ठन् विधिना सार्वगामी भवति ॥ ६॥